**उत्तरे स्य राजति** (ग्रा. १२. ११. ४५६. २) ॥ १७ ॥

उत्तरे साम्नि ॥ १७ ॥

**द्व्यक्षरो वा स्तोभः** ॥ १८ ॥

भवति । एकाक्षरो होवेति । द्व्यक्षरे तु स्यराजतीत्यन्तम् ॥ १८ ॥

5 इति पञ्चविधसूत्रे सभाष्ये द्वितीयप्रपाठकस्य द्वितीया खण्डिका ॥ २ ॥

---

## तृतीया खण्डिका

**महाऽ२ हाऽ२ इ। औऽ३ होऽ३१ इ। श्रवाऽ२:। हाऽ२ इ। औऽ३ होऽ३१ इ ॥ १ ॥**

उच्चा - (ग्रा. १२. १. ४६७. ९) - नवमे उच्यते ॥ १ ॥

**पूर्वं वैनयोर्वचनम् ॥ २ ॥** 5

एनयोः संघातयोः। अत्र विप्रतिपद्यन्ते केचित्। एनयोरुद्धारितयोः महाहा औहो एतत्पूर्वं मन्यन्ते। अन्ये तु उग्रँ शर्मा। एतद्वचनम्। विधेत्यर्थः ॥ २ ॥

**गम्भीरे पादवद्वृत्तिः ॥ ३ ॥**

औहोहुम्स्थिहाएहिया। हाहाइ। स्वादाइष्ठाया। माऽ२३४दी। 10
(ग्रा. १२. १. ४६८. ८)। अत्र षडक्षराः पादाः। ते पादवदेतद् (एते?) द्रष्टव्याः [इति मन्यन्ते]। चत्वार एव पादाः। तेनोपान्त्या पादगीतिः ॥ ३ ॥

**इन्द्रायेन्दो द्वितीय आऽ२३४र्को (ग्रा· १३. १. ४७२. २) ॥ ४ ॥**

द्वितीयग्रहणमसंमोहार्थम् ॥ ४ ॥ 15

**ओवाऽ२३। ओवाऽ२३। पूर्वं उद्गीथः ॥ ५ ॥**

इन्दुः पविष्टान्त्ये (ग्रा. १३· २· ४८१. ३)। एनयोः स्तोभयोः पूर्वं उद्गीथो भवति। कस्मादुच्यते इति। भक्तिलोपशङ्कया ॥ ५ ॥

**उपोषु - प्रथमे (ग्रा. १३. ३. ४८७. १) तृतीयपादाद्यः स्तोभः। षडक्षरं चार्चिकम् ॥ ६ ॥** 20

तृतीयपादादौ यः स्तोभः षडक्षरं चार्चिकं स प्रतिहारः। अप्राप्तेः ॥ ६ ॥ 22

---

6. V¹. अनयोः for एनयोः

8. ADB¹L. विचेत्यर्थः.

12. ADL. उपान्त्य for उपान्त्या.

21. V¹. om. षडक्षरं...औहोइ अयं (P. 56, L. 3.)

22. D. अप्राप्तः for अप्राप्तेः.

अवाहन्ना पञ्चाक्षरशः स्तोभः ॥ ७ ॥

अयावीता । औहोवा (ग्रा. १३. ३. ४९५. २) इत्यत्र अवाहन्नेति प्रतिहारः । किमयमेव पञ्चाक्षरशः स्तोभः । औहोवा । औहोइ । अयं स्तोभः विभाज्यत्वान्न प्राप्तः ॥ ७ ॥

5 पुनानद्वादशे (ग्रा. १४. ५. ५११. १२) चतुर्थपादाद्यः स्तोभः ॥ ८ ॥

औहोवा अत्र चतुर्थस्य पादस्य यः आदिर्भवति सः स्तोभः प्रतिहारः ॥ ८ ॥

परीतान्त्ययोश्च (ग्रा. १४. ५. ५१२. १४-१५) ॥ ९ ॥

10 स एव ॥ ९ ॥

अच्छाकोशाम्मधौ होऽ३ । हुम्माऽ२ ॥ १० ॥

प्रसोमदेववीतये (ग्रा. १४. ५. ५१४. ३) इति तृतीये स्तोभ-प्राप्त्यर्थम् ॥ १० ॥

येवहरितायाताइधा१ रायाऽ२ ॥ ११ ॥

15 हाउसोमाः । उष्वाण (ग्रा. १४. ५. ५१५. १) इत्यत्र ॥ ११ ॥

व्रतः शुचिबन्धुः प३वाकः । पा२३४ दा ॥ १२ ॥

प्रकाव्य-(ग्रा. १५. ६. ५२४ ३) तृतीये । सिकृणुषा (ग्रा. १६. ९. ५५८. २) प्राप्त्यर्थम् ॥ १२ ॥

अपश्वानँ श्नथा१ इष्टा२ ना ॥ १३ ॥

20 पुरोहाहाउ (ग्रा. १६. ८. ५४५. ३) इत्यत्र ॥ १३ ॥

न्याय्यो वाष्टाऽ२३४ ना ॥ १४ ॥

22 श्यावाश्वे (ग्रा. १६. ८. ५४५. ५) ॥ १४ ॥

---

7. V[1]. before अत्र adds : ओवा; S[1] S[2]. om. स.

12. S[1] S[2]. om. इति.

17. B[3]. तिकृणुषा, L. त्रिकृणुषा, DA कृणुषा for सिकृणुषा.

परो वा स्तोभादिः प्रत्युत्क्रान्तः ॥ १५ ॥

स प्रतिहारो भवति ॥ १५ ॥

पवाइत्र वाऽ३न्तोऽ२ । एऽ३ । क्षरन्ना । दाइवान् गच्छा३न् ॥ १६ ॥

सुतासोमाद्ये (ग्रा. १६. ८. ५४७. १) ॥ १६ ॥ 5

द्व्यक्षरो वा ॥ १७ ॥

पवाइ । दाइवान् । सुतासोमाद्ये (ग्रा. १६. ८. ५४७. १) ॥ १७ ॥

देवान् गच्छा (ग्रा. १६. ८. ५४७. २) ॥ १८ ॥

द्वितीये ॥ १८ ॥

देवऽ३न्होइ । गच्छो २३४ हा (ग्रा. १६. ८. ५४७. ४) ॥ १९ ॥ 10

चतुर्थे ॥ १९ ॥

श्रुष्टाइजाता । सइन्दवाः ॥ २० ॥

इन्द्रमच्छाद्ये (ग्रा. १७. १०. ५६६. १) ॥ २० ॥

आ इन्दाऽ२ वाऽ२ः (ग्रा. १७. १०. ५६६. २) ॥ २१ ॥ 15

द्वितीये ॥ २१ ॥

दावाऽ२३ः (ग्रा. १७. १०. ५६६. ३) ॥ २२ ॥

तृतीये ॥ २२ ॥

स इन्दवः सुवा (ग्रा. १७. १०. ५६६. ४) ॥ २३ ॥

चतुर्थे ॥ २३ ॥ 20

---

3. V[1] DR. om. न्तोऽ२ एऽ३ क्षरन्ना.

13. V[1]. om. श्रुष्टाइ ... चतुर्थे (L. 20).

**श्रुष्टाइ (ग्रा. १७. १०. ५६६. ५) ॥ २४ ॥**

पौष्कले ॥ २४ ॥

**चतुरक्षरो वा ॥ २५ ॥**

अस्मिन्नेव विकल्पः ॥ २५ ॥

5 **शाइशा ओ२३४ वा ॥ २६ ॥**

सखा । य आ ओ२३४ वा (ग्रा. १७. १०. ५६८. ५) इत्यत्र ॥ २६ ॥

**द्वौ चेच्छाइशौ ॥ २७ ॥**

द्वौ चेच्चिकीर्षेत् ततः शाइशाओऽ२३४ वा (ग्रा. १७. १०. 10 ५६८. ५) एका । षाता ओ२३४ वा इति द्वितीया ॥ २७ ॥

**पवा३२ । मा२३४ ना: ॥ २८ ॥**

सोमः पुना - (ग्रा. १७. १०. ५७२. ५) पञ्चमे ॥ २८ ॥

**पवमा२३ ना३: (ग्रा. १७. १०. ५७२. ६) ॥ २९ ॥**

षष्ठे ॥ २९ ॥

15 **णमधिगो२३४ औहोवा ॥ ३० ॥**

गोमन्न इन्दो (ग्रा. १७. १०. ५७४. १) इत्यत्र ॥ ३० ॥

**णमभिवा२३ ॥ ३१ ॥**

हावासा । भ्या२३४० त्वा (ग्रा. १७. १०. ५७५. १) इत्यत्र ॥ ३१ ॥

**नेतायः ॥ ३२ ॥**

20 ससु - (ग्रा. १७. ११. ५८२. ४) चतुर्थे । इतरेषु लक्षणसिद्ध
21 एव ॥ ३२ ॥

---

4. D. before विकल्प : adds :— साम्नि and after विकल्पः adds : श्रुष्टा इजाता.

10. S[1] S[2]. द्वितीयं for द्वितीया.

20. D. after चतुर्थे adds :— ससुन्वे २३ योवसूनामित्यत्र.

**अपा३म् । हुम्३वा३ ॥ ३३ ॥**

एषस्यधा - (ग्रा॰ १७. ११. ५८४. १) प्रथमे ॥ ३३ ॥

**एकाक्षरश्चोपद्रवः ॥ ३४ ॥**

एतस्मिन् पक्षे आइ ॥ ३४ ॥

**न्याय्यो वा । न्याय्यो वा ॥ ३५ ॥** 5

न्याय्यात् विकल्पः ॥ ३५ ॥

॥ इति पञ्चविधसूत्रे सभाष्ये द्वितीये प्रपाठके तृतीया खण्डिका ॥ ३ ॥ 7

---

4. D. after आइ adds : इति उपद्रवः.
5. D. न्यायो वा न्यायो वा for न्याय्यो वा न्याय्यो वा
6. LB[1] DA न्यायात् for न्याय्यात्.

## चतुर्थी खण्डिका ।

वैरूपतृतीयादीनामन्त्या पादगीतिः ॥ १ ॥

उपान्त्या विधा । वैरूपाणामन्त्या पादगीतिः प्रतिहारो भवति । किं सर्वेषामेव । तृतीयादीनाम् ॥ १ ॥

5 उपान्त्या वा विधा ॥ २ ॥

स्तोभभेदात् पदवत् दृष्टा ॥ २ ॥

बहिर्ऋचन्तु ॥ ३ ॥

उपान्त्या विधा यदि प्रतिहारः । एवं बहिर्ऋचं प्रतिहारः कृतो भवति । तत्र बहिरिष्यते । ऋचि प्रतिहारः स्यादिति अन्ये तु अवधारयन्ति ॥ ३ ॥

10 तथा परे विश्वतः ॥ ४ ॥

विश्वतोदावन् (आ. गा. १२४ - १२५) इति परे ॥ ४ ॥

सहोमहसोः स्वरीयसां तृतीयेऽन्त्यानुगानद्वितीयतृतीयेषु च ॥ ५ ॥

हाउहाउहाउवा । पिबासोमाम् (आ. गा. १३६) हाउहाउहाउ

15 वा । पिबासोमामिन्द्रमन्दतुत्वा (आ. गा. १३७) । परे च । हाउ होहाइ । अन्तरिक्ष१सुवर्दिवंजग । न्मा । (अ. गा. १५८) । अन्ते चानुगानस्य द्वितीये साम्नि तृतीये च । हा२ऽऊवाक् । होवा (अ. गा. १६४ - १६५) अत्र । अन्त्यानुगानद्वितीयतृतीययोश्चेति किं भवति । अन्त्या पादगीतिरुपान्त्या विधा ॥ ५ ॥

20 वैरूपाष्टमेऽन्त्यः पादश्चतुरुक्तः सस्तोभः ॥ ६ ॥

नाजातमष्टरोदसाइ । ऐहोइ । आ२३४ इही (आ. गा. ८)

22 इति । लक्षणत्वादुच्यते । परश्च स्तोभः ॥ ६ ॥

---

6. D. स्तोभाभेदात् for स्तोभभेदात्.

14. LB[1]A हाउ पिबासोमम् for हाउ...मन्दतुत्वा

अभित्वेन्द्रो रेति वैधवत् ॥ ७ ॥

हावौहोहाउ । अभित्वावार्षा ३ भासुताइ । औहोहावौहोऽ२ (आ. गा. १८) । अथवा अभित्वापूर्व (आ. गा. १३ - १४) इति द्विके । इन्द्रो राजा (आ. गा. ३६ – ३७) । द्विक एव । एतेषु वैधवत् प्रतिहारो भवति । वैधवत्त्वादेव भविष्यति इति वचनात् । मध्ये विकारदर्शनात् । उक्तं च आद्यन्तयोस्तु विकारो नान्यत्वकर (प. वि. सू. १. ४. ६) इति । इह तु मध्ये विकारादन्यत्वं प्रजायते । एकत्र त्रिपदास्वत्यृचम् (प. वि. सू. १. ४. १२) इति । अन्यत्र उपान्त्या पादगीतिः (प. वि. सू. १. ४. ८) इति ॥ ७ ॥ 5

यस्येदमिति द्वितीयः पादः ॥ ८ ॥

हाउयास्या (आ. गा. ३८) इत्यत्र द्वितीयः पादः ॥ ८ ॥ 10

तृतीयस्य वा त्र्यक्षरम् ॥ ९ ॥

ऋज्वर्थम् ॥ ९ ॥

ऋषभेऽन्त्ये त्रिरुक्ते मध्यमं वचनम् ॥ १० ॥

वाक्यस्याध्याहारः कर्तव्यः । अन्त्ये त्रिरुक्ते प्रत्यये यत् त्रिरुक्तमिति । तेन द्याविद्यवाइ (आ. गा. ४६) । अस्य त्रिरुक्तस्य मध्यमं वचनम् ॥ १० ॥ 15

अतीषङ्गे सिद्धः ॥ ११ ॥

विशेषार्थं ग्रहणम् ॥ ११ ॥

अन्धाश्च ॥ १२ ॥

जारा दोहा अन्धा इत्युच्यते । सोऽयं समुच्चयेन विकल्पः । च - शब्दात् ॥ १२ ॥ 20

नित्यवत्सा । शाक्वरीषु च त्रिरुक्ते ॥ १३ ॥

विषये अन्धा भवति । सिद्धश्च प्रतिहारो भवति । एकत्र धारा (आ. गा. ७५) । अन्यत्र शाक्वरे पादे च ॥ १३ ॥ 23

---

10. L. om. हाउयास्या ... ऋज्वर्थम् (L. 12)
19. B[1] V[1]. उदूहा for दोहा.
21. B[1] B[2]. नित्यवत्साः for नित्यवत्सा.
23. B[1] V[1] LAS[1] S[2]. om. अन्यत्र.

**णं कृणुतेति पञ्चाक्षरम् ॥ १४ ॥**

णं कृणावता (आ. गा. ६८) ॥ १४ ॥

**परं वातस्त्रिरुक्तम् ॥ १५ ॥**

एका ओवा (आ. गा. ६८) इति त्रिरुक्तम् ॥ १५ ॥

5 **परस्य वा त्रिरुक्तस्य द्विरुक्तम् ॥ १६ ॥**

परं यदस्मात् त्रिरुक्तात् तस्य वा द्विरुक्तं प्रतिहारो भवति । एकाऽ३ । ओइ । (आ. गा. ६८) ॥ १६ ॥

**मध्यमं वा वचनम् ॥ १७ ॥**

अस्य च त्रिरुक्तस्य यन्मध्यमं वचनम् । एकाऽ३ । ओइ ॥ १७ ॥

10 **सिद्धो विद्रथस्य प्रतिहारः ॥ १८ ॥**

होवाहाइ । योनः (आ. गा. ७०) इति । सिद्धग्रहणात् सस्तोभ इति मन्यन्ते । उपाध्यायपादास्तु सखाए भागं न कुर्वन्ति ॥ १८ ॥

**वैराजस्योत्तमे पदे मध्यमं वचनं सस्तोभम् ॥ १९ ॥**

हाउहाउहाउ । औहोइ । सोतुर्बाहुभ्यां सुयतो । नार्वाऽ२ (द्विः)
15 नार्वा । (आ. गा. ८६) एतन्मध्यमं वचनम् ॥ १९ ॥

**वैधवद्वा ॥ २० ॥**

त्रिपदास्वत्यृचम् (प. वि. सू. १. ४. १२) इति अन्त्या
18 पादगीतिः ॥ २० ॥

---

1. DV[1] AL. कृणुते पदेति for कृणुतेति.
6. ADV[1] L. त्रिरुक्ता for त्रिरुक्तात्.
13. B[1]. om. सस्तोभम् ॥ ... मध्यमं वचनम् (L. 15)
17. S[1]. स्वं त्यृचम् for °स्वत्यृचम्.

अयं पूषाद्ययोस्तृतीयस्य पादस्याभ्यासः ॥ २१ ॥

अयंपूषाइ ओ२३४ वा (आ. गा. १०६ - ७) इह तृतीयस्य पादस्याभ्यासः प्रतिहारो भवति। स्यभूमाना३ओ२३४ वा। परे वा अयमेवाभ्यासः ॥ २१ ॥

यण्वापत्ययोरुत्तरयोः स्तोत्रीययोर्मध्यमं पदं सस्तोभम् ॥ २ ॥                                   5

यण्वस्य संमिश्ल आवचो२३युजा३ (आ. गा. १२२) पुरस्तात् स्तोभ एव। अपत्ये उत्तरयोः स्तोत्रीययोः मध्यमं पदं विधीयते। न स्तोभः। प्राप्तत्वात् ॥ २२ ॥

अन्त्ययोर्वा पदयोश्चतुरक्षरं यण्वस्य ॥ २३ ॥                                   10

इन्द्रो वज्री। उग्र उग्रा (आ. गा. १२२) उत्तरयोरेव स्तोत्रीययोः। सस्तोभमिति वर्तते ॥ २३ ॥

सर्वास्वपत्यस्य ॥ २४ ॥

सर्वासु स्तोत्रीयासु प्रतिहारो भवति। अन्त्येषु चतुरक्षरमिति वर्तते। सस्तोभमिति[च] वर्तते। यदि वा प्रथमा स्तोत्रीया अप्रतिहारा। अथवा प्रतिहारवती पदान्त्येषु पादेषु। पादे चतुरक्षरं प्रतिहारः। यदा त्वप्रतिहारा उत्तरयोः स्तोत्रीययोः [द्वितीयौ] स-[स्तोभौ] इति। पदं सस्तोभम्। न चतुरक्षरम् ॥ २४ ॥                                   15 18

---

2. LB[1] V[1] A पूषा ओवा३ for पूषाइ ओ२३४ वा; L. अत्र for इह.

3. B[1] LA. स्यभूमाऽ३३ नाऽ३१, V[1]. स्यभूमा३ ना३ for स्यभूमाना३ ओ २३४ वा.

5. S[1] S[2]. after स्तोत्रीययोः add :– तृतीययोः

8. L. स्तोभप्राप्तत्वात् for स्तोभः। प्राप्तत्वात्.

12. DAL. सस्तोभः for सस्तोभम्.

14. V[1] B[1] DA. अन्तेषु for अन्त्येषु.

16. L. पादान्तेषु, A. पादान्त्येषु for पदान्त्येषु; DLA. om. पादेषु;

17. V[1]. अप्रतिहारात् for अप्रतिहारा

पञ्चाक्षर ओवान्तश्चतुः पार्थुरश्मस्य ॥ २५ ॥

एस्वादोः । ओऽ२३४ वा (आ. गा. १२९) । एतत् पार्थुरश्मम् । अत्र पञ्चाक्षरः प्रतिहारो भवति । एमधोः । ओऽ२३४ वा । एव-मादिः ॥ २५ ॥

5 अभ्यस्तो वृषकस्य तथैव ॥ २६ ॥

एस्वादोः (आ. गा. १३१) । इहाभ्यस्तः प्रतिहारश्चतुर्भवति । अभ्यस्तो वृषकस्येति वक्तव्ये तथैवेति यथा प्रस्तावः । यदि प्रस्तावोऽ-भ्यस्ताभ्यासिकः अयमपि अभ्यस्ताभ्यासिक एव । प्रस्तावोऽभ्यस्तः । अय-मप्यभ्यस्त इति ॥ २६ ॥

10 भद्रश्रेयसोरुत्तरयोर्विधयोर्मध्यमं वचनम् ॥ २७ ॥

होइहा (आ. गा. १३२) होइया (आ. गा. १३३) ॥ २७ ॥

वृषान्याय्यो वा ॥ २८ ॥

त्रिरुक्ते मध्यमं वचनमिति ॥ २८ ॥

द्विप्रतिहारे तथा च ॥ २९ ॥

15 द्विप्रतिहारे च सति तथैव वृषान्यय्यः । द्वयोरपि प्रतिहार-स्थानयोः ॥ २९ ॥

स्वराणामादितस्त्रयाणामुत्तमपादादौ चतुरक्षरम् ॥ ३० ॥

एयज्जायथा (आ. गा. १५०-१५४) एवमादीनां स्वराणामुत्तम-पादादौ चतुरक्षरं प्रतिहारो भवति । किं सर्वेषामेव । त्रयाणां विकल्पेन ।
20 आदितो वर्गस्य यानि त्रीणि तेषां स्तोभो भवति न भवतीति संशयः ॥ ३० ॥

---

3. S[2]. अतः for अत्र.

7. V[1]. यस्तथा, LA तथा for यथा.

11. D. ofter होइया (आ. गा. १३३) adds : वृष्णीसाम्नः

12. D. न्यायः for न्याय्यः ; LAV[1] B[1] before वृषा add : वृष्ण (A. वृष्णि) साम्नः.

14. S[2]. अपि for च.

15. B[1] V[1]. न्यायः for न्याय्यः.

19. V[1] L. after त्रयाणां add : किं ; V[1] L. विकल्पे । न । foı विकल्पेन.

उपान्त्या वा पादगीतिरेकेषाम् ॥ ३१ ॥

न तु ग्रन्थकारस्य ॥ ३१ ॥

इति पञ्चविधसूत्रे सभाष्ये द्वितीये प्रपाठके चतुर्थी खण्डिका ॥ ४ ॥ 3

---

## पञ्चमी खण्डिका

**वाचोव्रते रमतां सप्ताक्षरः ॥ १ ॥**

वाग्रमताम् । रमताम् (आ. गा. १६७) इत्ययम् । वाग्रमता-मित्यादीनि सप्ताक्षराणि । उभे यदिन्द्र रोदसी (सा. ३७९) इति अग्निं न स्वृक्तिभिः (सा. ४२०) इत्याद्ये । इन्द्रायेन्दो - (सा. ४७२) द्वितीये । सुतासोम - (सा. ५४७) प्रथमे चेति ॥ १ ॥

**द्वितीये चतुरक्षरः ॥ २ ॥**

वामताम् (आ. गा. १६८) इति पूर्ववत् ॥ २ ॥

**सत्रस्यर्द्धिन्यायेषु स्तोभसामसूपान्त्या विधा ॥ ३ ॥**

10 स्तोभसामस्विति वचनात् निश्रेय एव न भवति । यथाङ्गिरसां व्रते (आ. गा. १८७ - १८८) । तत्र स्तोभविभाग्यधर्मा ॥ ३ ॥

**सिध्दोऽग्निमीडे गवांव्रते ॥ ४ ॥**

हाउहाउहाउवा । होतारं रत्नधा (आ. गा. १८४) इति ॥ ४ ॥

**इलान्दाद्ये कश्यपग्रीवाहृदयेडानांसंक्षारेषु वृषावद्रयिं वर्च इति हुम्मान्तः ॥ ५ ॥**

इलान्दाद्ये ( अ. गा. २०७. ) वृषावदित्यतिदिश्यते । त्रिरुक्तस्य द्विरुक्तं मध्यमं वचनमिति । कश्यपग्रीवायां (आ. गा. २४०) त्रिरुक्तं द्विरुक्तं मध्यमं चेति । इलान्दाद्ये तत् हृदयेडानांसंक्षारयोः (आ. गा. २४३ - २४४) । रयिं [ वर्चः । ] भ्राजा ओहोहोहाइ (आ. गा. २११) हुम्मान्तः ॥ ५ ॥

---

11. V[1]. विभागधर्मा, B[1]DLS[1]S[2]. विभाग्यधर्मः for विभाग्यधर्मा
15. DB[2]. हिम्मान्तः, V[1]. कम्मान्तः for हुम्मान्तः.
16. L. वृषावतीति for वृषावदिति.
17. A. द्विरुत्तरं for द्विरुक्तं ; V[1] after मध्यमं adds : वा.
19. DAS[2]. रयि, L. रइ, B[1]S[1] रयिः for रयिं ;
    D. हिम्मान्तः, V[1] कमान्तः for हुम्मान्तः.

देवव्रतेषु षडक्षर इडाभान्तः ॥ ६ ॥

नइह । असभ्यम् (आ. गा. २१२-१४) इति । एवं षडक्षर इडाभान्तः इति मन्यन्ते । अन्ये तु सह इडाभा षडक्षरं मन्यन्ते ॥ ६ ॥

निह्नवाभिनिह्नवयोः प्रागुपायात्पर्व ॥ ७ ॥

पर्वग्रहणादादेशपर्व ॥ ७ ॥ 5

दिवाकीर्त्यस्यात्मनि तृतीया विधा ॥ ८ ॥

परिसंख्यानार्थम् ॥ ८ ॥

समैरयेषु विभाग्यः ॥ ९ ॥

सन्त्वाभूतान्यैरयन् (आ. गा. २६९) इत्यत्र विभाग्यः ॥ ९ ॥

आदित्यात्मनि चतुर्थः पादः पूर्वश्च स्तोभः ॥ १० ॥ 10

सुपिप्रसुपीऐही (आ. गा. २७०) इत्येवमादिः स्तोभः ॥ १० ॥

परिधिषु यण्ववदुपान्त्या वा पादगीतिरेकेषाम् ॥ ११ ॥

[एकेषां मते परिधिषु (आ. गा. २८०–२८५) यण्ववत् उपान्त्या पादगीतिः प्रतिहारो भवति ॥ ११ ॥]

मित्रावरुणयोरुपान्त्ये त्रिरुक्ते मध्यमं वचनम् ॥ १२ ॥ 15

[मित्रावरुणयोः (आ. गा. २८७) साम्नि उपान्त्ये त्रिरुक्ते प्रत्यये मध्यमं वचनम् ॥ १२ ॥]

वृषावद्वा ॥ १३ ॥

[वा अथवा वृषावत् ॥ १३ ॥ 19

---

1. AL. भावान्तः for भान्तः.
2. B¹AV¹. मइह, L. मइए for नइह.
3. LDA. भावान्तः for भान्तः ; ALD सः for सह.
6. S¹S². °कीर्त्यसामनि for °कीर्त्यस्यात्मनि.
8. B². अविभाग्यः for विभाग्यः.

उन्नये च वृषावत् ॥ १४ ॥

[आदित्यस्य उन्नये (आ. गा. २९०) प्रतिहारः वृषावत् भवति ॥ १४ ॥]

शक्करीषु ह्रोन्तः । शक्करीषु ह्रोन्तः ॥ १५ ॥

5 [शक्करीषु महानाम्नीषु ह्रोन्तः प्रतिहारः ।] खण्डसमाप्त्यर्थं द्विरुक्तिः ॥ १५ ॥

7 इति पञ्चविधसूत्रे सभाष्ये द्वितीये प्रपाठके पञ्चमी खण्डिका ॥ ५ ॥

---

4. S¹S². after ह्रोन्तः ॥ add :– ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अत्र परिधिष्वित्यादीनां सूत्राणां व्याख्यायत इति मम भाति ॥

## षष्ठी खण्डिका

### निधनं पर्व सामान्यम् ॥ १ ॥

निधनलक्षणमिदानीमनुक्रमिष्यामः । अत आह—**निधनं पर्व सामान्यम्** इति । पर्वग्रहणात् संघातपर्वापीति । यथा **हो आउ** । **इहाओ रुद्धो** वैराज इति ॥ १ ॥ 5

### जातःप्रभृतीनि वासुवद्रवां जायताइवा न्याय्यस्य ॥ २ ॥

उदाहरणानि **जातः परेण** – ( ग्रा. २. ९. ९०. १ ) आदीनि । **वासुवद्रवाम्** । **तरणिरित्सिषाधे** (ग्रा. ६. १. २३८. १) । **आविमर्या** (ग्रा. ११. ९. ४३५. १) इति [अत्र] **जायाता** । **आइवा** । **एषस्यधाघे** (ग्रा. १७. ११. ५८४. १) । एष **न्याय्यस्य** सामगणस्य ॥ २ ॥ 10

### अन्त्यसदृशमन्तस्साम्नि जातःपरेण - नकि त्वंहत्यद् - उभे यद् - अग्निनेन्द्रायेन्दो - सुतासोमप्रथमे च ॥ ३ ॥

**अन्तःसाम्नि** च निधनं भवति । कथं लक्षणम् ? सामान्त्यपदसदृशम् । उदाहरणानि । **जातः परेण** (ग्रा. २. १. ९०. १) इति । **न कि देवा** (ग्रा. ५. ७. १७६. १) **त्वं ह त्यत्सप्तभ्यः** (ग्रा. ८. १०. ३२६. १.) इत्याद्ये । **उभे यदिन्द्र** (आ. ग्रा. १३०) इति । **अग्निं न स्ववृक्तिभिः** (ग्रा. ११. ८. ४२०. १) इत्याद्ये । **इन्द्रायेन्दो** - (ग्रा. १३. १. ४७२. २) द्वितीये । **सुतासोमधुमत्तम** - (ग्रा. १६. ८. ५४७. १) प्रथमे चेति ॥ ३ ॥ 15

### अक्षरं तु वाग्घाइकारः परिस्वारः । परं वातिस्वार्यात् आदित्प्रियंभगायादीनि । दायो सूगो होतोहा - प्रभृतीनीयेथादीनि च ॥ ४ ॥ 20

**अक्षरं** त्वेकनिधनं भवति । किं तत् । वाक्शब्दः **हाइकारः परिस्वार** इति । उदाहरणानि – **आदित्प्रत्नस्य** (ग्रा. १. २. २०. १) । **प्रियम्** 23

---

4. LAS[1]. अथा. for यथा.

6. DV[1] D. न्यायस्य for न्याय्यस्य.

10. ADLS[1] S[2]. ग्रहणस्य for गणस्य.

(ग्रा. १. ४. ३५. १) यज्ञायज्ञीये । भगाय । परिप्रधन्वाद्ये (ग्रा. ११. ९. ४२७. १) । एवमादि[षु]वाक्शब्दो निधनं भवति । संघातपर्वप्राप्ताविदमुच्यते । दायो । प्रेष्ठंत्राद्ये (ग्रा. १. १. ५. १) सुगो । अपत्यं वृजिनम् (ग्रा. ३. ११. १०५. १) [प्रथमे] हो४ तो६ हाइ५ । अग्निर्वृत्राणि (ग्रा. १. १. ४. ३)
5 [तृतीये ।] [एवमादीनाम्] अन्तेषु हाइकारः । इयेथा । अग्ने मृडमहा१असि - (ग्रा. १. ३. २३. २) द्वितीये । एवमादीनि परिस्वारोदाहरणानि । परं वानिस्वार्यादित्यत्रोदाहरणम् - कुत्सस्याधिरथीये हो२४ वा । उहुवा । हो३१६ (ग्रा. १५. ७. ५३३. १) । अयमतिस्वारः । अस्मात् परं हाउवेति । वाशब्दो वाक्यपूरणार्थः ॥ ४ ॥

10　**ओइडाहोइडेति द्व्यक्षरमेकाक्षरं वा शीकोयादिषु च ॥ ५ ॥**

जराबोधीये शीकोइडा (ग्रा· १· २· १५. २) । एवमादिषु द्व्यक्षरमेकाक्षरं वा भवति । आदिग्रहणात् मदोइ । डा (ग्रा· १· १२. ३५१. १) । पिबोइ । डा (ग्रा. १०. ५· ३९२. ४) । दधोइ । डा । इति ॥ ५ ॥

कथं जनवृक्तायां द्व्यक्षरमिति । उच्यते-

15　**एषानुनूतेति श्रुतिः ॥ ६ ॥**

एषानुनूता । एषामेवात्र इडा अनुनूता । ततोऽनुनूता भवति
17 यद्यदि द्व्यक्षरा भवति नेतरथा । तस्मादयमेव पक्षो ज्यायान् ॥ ६ ॥

---

4. B[1] AL. वृत्राणोऽन्तेषु, D. वृत्राणान्तेषु for वृत्राणि...अन्तेषु.

7. AB[1] LD. पर्ववाति (L. पर्वयाति, DS[1] पर्वाति) स्वर्यादित्रय° for परं वानिस्वार्यादित्यत्र.

9. S[1] S[2]. वाक् for वाक्य ; S[2]. Concludes with वाक्यपूरणार्थः ।

13. V[1] LB[1]. पिबो । इ । for पिबोइ । डा.

14. L. प्रत्तायां, A. वृत्तायां for वृक्तायां.

15. L. एषान्वितेति for एषानुनूतेति.

16. आ३ नूता ततो३ नूता for अनुनूता । ततोऽनुनूता.

17. S[1] B[1] LAV[1] D[2]. तेन रथा for नेतरथा.

होइडाभ्यासे संदर्भः ॥ ७ ॥

बह्वचो यत्र होइडास्तत्र सर्वासां संदर्भः । संग्रथनं समुच्चय इत्यर्थः । यथा महावैश्वामित्रेषु ॥ ७ ॥

सर्वासां वान्त्यम् ॥ ८ ॥

अक्षरमिति वाक्यशेषः । इडास्वेतत् सर्वसामान्यम् । किं सकृदेक-  5
वचनात् । न । सूत्रारम्भात् त्रिर्भवति ॥ ८ ॥

अन्त्याया वा ॥ ९ ॥

इडायां ह्यन्त्यमक्षरं न वा अन्त्यमन्त्यम् । यथा पूर्वोक्तम् । नेह डाशब्दः सकृत् ॥ ९ ॥

डैवेमं स्तो त्वावतो विधान्याय्यत्वात् ॥ १० ॥  10

डाशब्द एव भवति । तत् द्व्यक्षरं वेति विकल्पः । क । **इमं स्तोमायां** (ग्रा. २.७.६६.९) । **त्वावतः पुरूवसो** (ग्रा. ८.५.१९३.१) । कस्मात् । यस्मादिहोशब्दोऽपि विधाङ्गम् । अतो डैव ॥ १० ॥

पीति वा संभवात् ॥ ११ ॥

**यस्य त्यत्** - (ग्रा. १०.५.३९२.४) चतुर्थे **पीति** प्रतिहार उक्तो  15
वैकल्पिकः । स यदा भवति तदा द्व्यक्षरस्य निधनस्यासंभवात् एकाक्षरं निधनं भवति । इतरस्मिन् यथोक्त एव ॥ ११ ॥

अर्धेडा सर्वत्र ॥ १२ ॥

इडित्यर्धेडा सर्वत्र । अन्त्ये मध्ये च ॥ १२ ॥  19

---

1. LA. संरथनं for संग्रथनं ; DB[1]S[1]. समुच्चयार्थः, L. समुच्य यथार्थः for समुच्चय इत्यर्थः.

6. DLV[1]A. सूत्रारम्भास्त्रिर्, for सूत्रारम्भात् त्रिर्.

8. A. इडान्त्यम्, S[1]DV[1]. इडाया ह्यन्तम्°, B[1] इडायां ह्यन्तम्, for इडायां ह्यन्त्यम्.

11. AB[1]LV[1]S[1] जशब्दः for डाशब्दः.

15. D. त्यच्छम्बरमिति for त्यत्.

17. DALD. पथोज एव for यथोक्त एव.

19. A. इम्विति, L. इव्विति for इडिति.

## रोहादिहोपाथेडोपोष्वतीषङ्गादीनां ॥ १३ ॥

इहा । उपा । अथा । इडा । एताश्च निधनं भवन्ति । किमविशेषेण । न । रोहात्स्वराद्यदि परा भवन्ति । प्रथमो रोह इति । उदाहरणानि । उपोषु - (ग्रा. १३.३.४८७.१) प्रथमे इहा । द्वितीय उपा ।
5 अतीषङ्गादिषूभयम् । अथा इडा च । किं स्वराण्येतानि निधनानि भवन्ति । उच्यते । रोहस्वरादेव नान्यस्वरात् । यथा जातः परे (ग्रा. २. ९. ९०. १) । अन्ये तु रोहादपि परा नैव निधनं भवति [इति] । आरोहस्वारादस्याः । कुतः एतदिति । यथा भूतोदाहरणात् । क्वचिच्चारोहस्वरात् परा भवन्ति । यथा भद्रश्रेयसो रोहस्वरा इहा आरोहादपि भवति । तिस्रोवाचायाम् (ग्रा. १५.
10 ६. ५२५) एकपर्वत्वान्न भवति ॥ १३ ॥

## इहान्धा सर्वत्र तिग्मेन - प्रभृतीनि ॥ १४ ॥

इहाद्रव्या अन्धा सर्वत्र निधनं भवति । रोहादरोहाच्च । उदाहरणानि । अग्निस्तिग्मेन (ग्रा. १. ३. २२. २) इति द्वितीये । अन्यानि चैवं-जातीयानि ॥ १४ ॥

15

## वारवन्तीये परीताष्टमे च पर्वान्तरत्वान्न ॥ १५ ॥

वारवन्तीये (ग्रा. १· २· १७· २-३) परीतोषि - (ग्रा. १४. ५. ५१२· ८) अष्टमे च इहा न भवति निधनम् । कस्मात् । पर्वान्तरत्वात् । यद्येवं पर्वान्तरत्वादेव न भविष्यतीति । अरोहपरत्वाच्च इहा प्राप्ता । प्रतिषेधं कुर्वन् दर्शयति । अरोहादपि परा भवति । यथोक्तं भद्रश्रेयसोरिति । क्वचिद्
20 द्रव्यान्तरप्रकृतापि भवति । यथा इहो इहा भद्रमिति भासेः ॥ १५ ॥

---

2. S[1]. अवा for उपा.
5. V[1]. निधनं for निधनानि.
8. L. परात् for परा.
9. DLA. इह for इहा.
13. S[1]. ins. तृतीये above द्वितीये
15. DLAV[1]. A. om. न.
17. AL. इह for इहा.
18. S[1] D. अत्रोह° L. त्रिरोह° B[1] V[1] A. आरोह° for अरोह.°
19. S[1] D. अत्रोहाद्, V[1] आरोहाद् for अरोहात्.

## नेम्या हीषी नेमिःप्रभृतीनि ॥ १६ ॥

**नाइमिश्चक्रौवा ई २३४ वा** (ग्रा. ३. १०. ९४. १)। अस्यां **नेम्याः** परो हीषी भवति। उदाहरणानि। नेम्याश्चो भवतीत्यस्मिन् योगे **नाइमिश्चक्रौवा** इत्येवंप्रभृतीनि ॥ १६ ॥

## मन्द्रात् ष्ठाविवक्षणादीनि ॥ १७ ॥ 5

मन्द्राच्च स्वरात् परं ष्ठास्वरं निधनं भवति। उदाहरणानि। निष्ठा-निधनस्य द्वैधं ष्ठा भवतीत्यस्मिन् योगे **विवक्षणादीनि**। यथा **वा३इवक्ष। णा२३४ इ**। (ग्रा. ११. ६. ४०७. १) ॥ १७ ॥

॥ इति पञ्चविधसूत्रे सभाष्ये द्वितीये प्रपाठके षष्ठी खण्डिका ॥ ६ ॥ 9

---

1. S[1]. नेम्यः for नेम्या.

2. B[1]L. °श्चक्रौवा ३३। गृवा, V[1]°श्चक्रौ ३ वा ३ गुवा, D.°श्चक्रौ वा। क्रौवा ३३ नुवा, A. °श्चक्रौ वानुनुगुवा for °श्चक्रौवा। ई २३४ वा see CN ; DS[1]. अस्य for अस्यां.

6. V. om. मन्द्राच्च, णा २३४ इ। (1. L. 8)

7. S[1] A LB[1] om. यथा ... णा २३४ इ।

## सप्तमी खण्डिका ॥

अथोपायाः ॥ १ ॥

उपाया निधनस्य वर्तिष्यन्ते । कथं निधनं भवति । यथा त्वन्धकारे घटादीनां दर्शने दीप उपायो भवति । यथा च घटादीनां करणादग्निना उपायः । एवं पूर्वस्यां खण्डिकायाम् अनुपायपराणि निधनानि व्याख्यातानि । अस्यां तु खण्डिकायाम् उपायपराण्येव वर्तिष्यन्ते ॥ १ ॥

पूर्वा चेदौहो वा मन्द्रस्वरा ॥ २ ॥

यदि च परं ह्रादीनां किंचित् स्यात् तन्निधनं वेदितव्यम् ॥ २ ॥

महाहा ॥ ३ ॥

महाहास्वरवत् आद्यौहोवा स्यात् । मेंहा३हाई । तमिन्द्रं वाजयामसी (ग्रा. ३. १. ११९. ३) इति तृतीये साम्नि ॥ ३ ॥

हीष्यन्ताच्च ॥ ४ ॥

बर्हिषे वेत्यर्थः । औहोवैव ॥ ४ ॥

ओवा च विस्वरादिनि ॥ ५ ॥

यस्या आदिर्नानास्वरेषु वर्तते सा [ओवा] । विस्वरादिनि । चशब्दादविस्वरादिष्वपि । [यथा] यदिन्द्रचित्रायाम् (ग्रा. ९. १२. ३४५. २) ॥ ५ ॥

अवाच: ॥ ६ ॥

वाचःस्वरादिनि न भवत्युपायः ॥ ६ ॥

---

4. V[1]. करणाद्यर्जनादुपायः, ALB[1]. करणादर्जुनादुपायः. for करणादग्निना उपायः,

5. D. वाक्यानि for निधनानि.

10. ALB[1]. अद्यौहोवा for आद्यौहोवा ; S[1]. हा३इ for हाइ.

11. ALV[1]B[1]S[1]. अत्र for तृतीये साम्नि.

14. AV[1]DLB[1]S[1]. विस्वरावीनि. See CN:

15. L. om. यस्या आदिर् ... सा ; AV[1]DLB[1]S[1]. विस्वरादीनि for विस्वरादिनि.

वागाउकारपूर्वा ॥ ७ ॥

वागुपाये यदाउकारपूर्वा स्यात् ॥ ७ ॥

हुम्मा मन्द्रवद्वैस्वर्यम् निधनं च ॥ ८ ॥

निधनोपायः ॥ ८ ॥

तेभ्यः ष्ठाहीषीप्रथमोच्चानि वाजा चान्धा च सामा च ॥ ९ ॥ 5

तेभ्य एव पराणि ष्ठाहीष्यादीनि निधनं भवन्ति । अन्यानि तेभ्यश्चान्ये-भ्यश्चेति ॥ ९ ॥

आत्वासोप्रभृतीनि हिन्वन्नृशुक्रा ·यःकाओजस्तदादयो हुम्मात्वे श्रृणाह्यादीन्यग्निर्वृत्रादीनि ॥ १० ॥ 10

औहोवा मन्द्रस्वरेत्युक्तम् । तेषामुदाहरणानि । मन्द्रस्वरायास्तावत् । **आत्वा सोमस्यगल्दया** (ग्रा. ८. ८. ३०७. १) इति । **आसोता परि** (ग्रा. १७. ११. ५८०) इति च । एवंप्रभृतीनि । महास्वरायाः **प्राणाः शिशुः** - (ग्रा. १७. १०. ५७०. ३) तृतीये **हिन्वन्नृतस्येति** । हीषीस्वरायाः **इममिन्द्र** - (ग्रा. ९. १२. ३४४. २) द्वितीये । एतन्निहोताया उदाहरणम् । 15 **ओवा च विस्वरादिनि** (प. वि. सू. २. ७. ५) इत्युक्तम् । तस्या उदा-हरणम् । **प्रमंदाऽ२३४ इने** (ग्रा. १०. ३. ३८०. १) । अत्र **यःकाऽ२ ओ२३४ वा** । **वागाउ** पूर्ववदित्युक्तम् । तस्या उदाहरणम् । **हा । हाउवा३** । **ओजस्तदस्य** (ग्रा. ५. ७. १८२. १) इति । **हिम्मेति** चोक्तम् । अस्या आन्धीगव उदाहरणम् । **हुम्मात्व** (ग्रा. १६. ८. 20 ५४५. ६) इत्युभयं गृह्यते । **हुम्मा** विशेषणार्थम् । तेन ज्यायादिषु न भवति । **मन्द्रवद्वैस्वर्यम्** [इति] उक्तम् । तस्योदाहरणम् । **श्रृणाहि विश्व-तस्परि** (ग्रा. ३. १०. ९५. १) । अन्यानि च निधनं चेत्युक्तम् । तस्योदा-हरणम् । **अग्निर्वृत्राणि** (ग्रा. १. १. ४. १) इत्याद्ये ॥ १० ॥ 24

---

3. D. हिम्मा for हुम्मा.

16. ALDB[1]V[1]S[1]. विस्वरादीनि for विस्वरादिनि ; LA. om. इति; S[1]. तस्य for तस्याः.

19. DS[1]. हुम्मा for हिम्मा.

नाऽष्ठादाश्च ॥ ११ ॥

परं निधनं भवति । नाऽशब्दात् ष्ठाशब्दाच्चेत्यर्थः । क्व तौ । अवद्रप्सान्त्ये (ग्रा. ८. १०. ३२३. ४) ष्ठाशब्दात् । सोमः पवते जनिता (ग्रा. १५. ६. ५२७. २) इति द्वितीये नाऽशब्दात् । क्रमभेदोदाहरणाद् विषय उक्तः ॥ ११ ॥

आत्वासोमप्रभृतिषु वादीनां निधनत्वे को विषय इत्याह —

पयसि विकर्णे शुक्रियोपान्त्ये ॥ १२ ॥

पय आदिषु इयो३इया । अग्नेयुङ्क्ष्वाहियेतवा (आ. गा. ११९) इति । विकर्णे हाहाउ । इडा । ऋतम्मेविभ्राड् (आ. गा. २५७) इति । फाट् । फाट् । भ्राट् । शुक्रियोपान्त्ये हाउ । आगोमतिव्रजेभजा (आ. गा. २८९) इति । एतेषु वा स्वरो निधनं भवति ॥ १२ ॥

ऋषभचतुस्त्रिंशयोः ॥ १३ ॥

सुरूपकृत्नु (आ. गा. ४६) जास्वरः । चतुस्त्रिंशत्संमिते च क्षौ (आ. गा. २००) ॥ १३ ॥

शन्नः प्रभृतीनि ॥ १४ ॥

आन्धोदाहरणानि । उहुवा ओहा । औहोवा । शन्नोदेवीः (आ. गा. २३) इति ॥ १४ ॥

अन्तरिक्षादीनि च ॥ १५ ॥

सामोदाहरणानि । सा ३४ मा । अनुहित्वासुतम् (ग्रा. ११. ९. ४३२. १) इत्यत्र । आदिग्रहणात् रेवत्यः शक्यं इति ॥ १५ ॥

---

5. DB[1] S[1]. अविषयः for विषयः.

10. V[1] B[1] A. फाश् फाट्, L[1]. फाशि फाट् for फाट् फाट्.

11. V[1]. om. वा.

**आर्चिकमपादान्त्यमेकेषां वा ॥ १६ ॥**

एकेषामाचार्याणाम् आर्चिकमपादान्त्यं निधनं वा भवति ॥ १६ ॥

**देवाप्रभृतीनि ॥ १७ ॥**

उदाहरणानि । तंगूर्धया - (ग्रा. ३. १२. १०९. २) द्वितीये । एवं एन्द्रया - (ग्रा. ९. १२. ३४८. २) द्वितीय एव ॥ १७ ॥ 5

**तविषाम् ॥ १८ ॥**

तमु अभि - (ग्रा. १०. ४. ३८२. २) द्वितीये निधनं भवति ॥ १८ ॥

**पवमा ॥ १९ ॥**

मृज्यमानाद्ये (ग्रा. १५. ५. ५१७. १) । त्वंह्यङ्गदैव्य (ग्रा. १७. ११. ५८३. १) इति वा निधनं भवति ॥ १९ ॥ 10

**मयि वर्चः ॥ २० ॥**

आनोऽ२ब्भुवाऽ२ । या२३४ औहोवा । मयिवर्चः । (आ. गा. १७३) निधनं भवति ॥ २० ॥

**वार्तघ्ने ॥ २१ ॥**

हाउवा । वृत्रहत्यायहोइ (आ. २०३) इत्यत्र वार्तघ्ने भवति ॥ २१ ॥ 15

**उवेकारौइकारा व्यवयन्तो विघातका निधनाङ्गं च ॥ २२ ॥**

उशब्द एकार ओइकारश्च इत्येते व्यवयन्तः उपायं निधनं च निधनस्यापातं न कुर्वन्ति । निधनाङ्गं च भवति ॥ २२ ॥ 20

---

1. S[1]. om. वा.

4. AD[1]B[1]LS[1]. निधनं भवति for उदाहरणानि ... एवं.

10. ADLB[1]S[1]. om. वा.

17. B[1]LS[1]. विघातकानि, A. विघा । तक्कानि, D. विघातकानि for विघातका.

19. B[1]DALS[1]. एकाक्षर: for एकार:

उष्णिगष्टान्तः ॥ २३ ॥

आर्चिकमपादान्त्यमिति विशेषः ॥ २३ ॥

न विधादिस्त्वांवृत्रेषु - परीतः - पवते ॥ २४ ॥

विधाया आदिर्निधनलक्षणोपेतोऽपि न भवति । सर्वत्र प्रतिषेधः ।
5 **त्वांवृत्रेषु** इति [आदीनि] उदाहरणानि । त्वामिद्धि (ग्रा. ६ १. २३४. १) ।
**परीतोषि** (ग्रा. १४. ५. ५१२. ३) तृतीये । **पवतेहर्य** (ग्रा. १७. १०.
५७६. १-२) प्रथमद्वितीययोः ॥ २४ ॥

ददाशान्तम् ॥ २५ ॥

न **तस्य** (ग्रा. ३. ११. १०४. १) इत्यत्र शकारान्तं निधनमिति ।
10 **यो अग्नये** इत्येवमादि ॥ २५ ॥

ऋषीणां मान्तम् ॥ २६ ॥

**परिकोशंमधुश्चुतम्** (ग्रा. १७. १०. ५७७. १) इत्यत्र मकारान्तम् ।
**ऋषीणामित्येतावत्** ॥ २६ ॥

गोभिष्टे वान्तम् ॥ २७ ॥

15 **हावास्मा** (ग्रा. १७. १०. ५७५. १) इत्यत्र **गोभिष्टेव** । एतावदेव
केचित् । अन्ये तु **गोभिष्टेवर्णमभि वा** इति । तुल्यत्वात् संधेः ॥ २७ ॥

बाधो जहीति पर्व ॥ २८ ॥

**भिन्धिविश्वा** (ग्रा. ४. २. १३४. १) इति तद्विविद्वास्वरं प्राप्तं
19 पर्वेति । योगविभागं पर्व वा ॥ २८ ॥

---

1. B[1] अष्टाक्षरः for अष्टान्तः.
4. V[1]. निधनात्म for निधन.
16. S[1]. इति for अभि.
18. V[1]. अप्राप्तं for प्राप्तं.
19. V[1]. विभागे for विभागं.

इहेव त्रीणि वा ॥ २९ ॥

**इहेव शृण्व** (ग्रा. ४. ३. १३५. १) इत्यत्र एकं पर्व निधनम् । त्रीणि वा पर्वाणि निधनानि । एहियौहोइ । एहियौहोऽ२३इ । ए२३४ ही । अथवा एहीति वा ॥ २९ ॥

आतून इहकारः ॥ ३० ॥ 5

आतूनइन्द्रक्षुमन्तं - (ग्रा. ५. ६. १६७. ४) चतुर्थे इहकारो निधनं भवति । पर्वैकत्वाच्चान्यत्रापि भवति । यथा इहा विष्वक्तस्ता (ग्रा. ९. ११. ३३९. १) इति ॥ ३० ॥

रथीनां च सुहव्यम् ॥ ३१ ॥

इन्द्रंविश्वा (ग्रा. ९. १२. ३४३. १) इत्यत्र रथीनां च सुहव्यमिति 10 रथीविशेषणार्थम् । आ नो विश्वासु हव्यम् (ग्रा. ७. ४. २६९. १) इति प्रथमे सुहाव्याऽ२म् । सुहव्यमिति स्वरा रथीतमा प्रथम एव ॥ ३१ ॥

यो रयिं पवस्व हीषीप्रथमोच्चे ॥ ३२ ॥

यो रयिंवोरयाहाउ (ग्रा. ९. १२. ३५१. १) इत्यत्र हीषी च प्रथमोच्चं च हीषीप्रथमोच्चे निधने भवतः । अप्राप्तत्वादुच्यते । पवस्व 15 मधुमत्तम (ग्रा. १७. ११. ५७८. १) इति प्रथमे । प्राप्तग्रहणं विकल्पार्थम् ॥ ३२ ॥

प्रथमोच्चं वा ॥ ३३ ॥

केवलमेव निधनं भवत्युभयोः । सोऽयं विकल्पः ॥ ३३ ॥ 19

---

4. V[1]. om. इति वा.

12. B[1] L. om. सुहाव्याऽ२म्.

14. V[1]. इह for इत्यत्र ; L. om. हीषी च प्रथमोच्चं.

15. AB[1]. D. न हीषी for च हीषी°.

**अयाप** (ग्रा. १६. ७. ५४१. ३) **इह इहिया त्रिरुक्तम्** ॥ ३४ ॥

अवागस्मिन् इहिया द्रव्यं भवति । त्रिरुक्तं च । यकारो लुप्तवद् द्रष्टव्यः । त्रिरुक्तं त्रय इहकाराः । यद्येवं त्रिरुक्तमिति न वक्तव्यम् ।
5 कस्मात् । इहान्धा सर्वेति परिभाषणात् । उच्यते । परिसंख्यानभयात् ॥ ३४

**प्रथः कपे च** ॥ ३५ ॥

हाउप्राथाः (आ. गा. १४६-७) द्विके । [कपे ।] हाउ (३) वा अभित्वाशूर (आ. गा. २०१) इत्यत्र ॥ ३५ ॥

**दिवाकीर्त्ये** (आ. गा. २६०) **मदायाः** ॥ ३६ ॥

10 द्वितीयेऽनुगाने ॥ ३६ ॥

**पुरीषपदेषु च** ॥ ३७ ॥

हियेत्रा । हिपग्राइ । इन्द्रा । हिपूषान् । हिदेवाः । (आ. गा. परिशिष्ट. ४) एता मदायाः । इन्दुः पविष्ट चारुमदायाम् (ग्रा. ११. ९. ४३१. १) एव ॥ ३७ ॥

15 **दिक्शब्दः स्वरेषु** ॥ ३८ ॥

मदाया एव दिक्शब्दः । एऔहोवादीशाः (आ. गा. १५०-१५२)। केचित् कृत्स्नं मन्यन्ते । अन्ये तावन्मात्र एव ॥ ३८ ॥

**हृदये** (आ. गा. २४३) **त्रिरुक्तं प्राग्वचः** ॥ ३९ ॥

वृषान्यायेऽस्मिन्निति दिष्टः । शेषः पूर्वस्मिन् त्रिरुक्ते भवति । उत्तरं
20 त्रिरुक्तं निधनं भवति । विधादित्वाच्च प्रतिषेधः । तत्प्रतिप्रसवः ॥ ३९ ॥

**आनन्दप्रतिनन्दयोः** (आ. गा. २७१ - २७२) ॥ ४० ॥

22 विशेषः । स उद्गीथो वेदितव्यः ॥ ४० ॥

---

5. A. सर्वेऽपि for सर्वेति.

13. AB[1] LS[1]. मदाया, V[1]. मदायां for मदायाः.

15. AL. वाक् for दिक्.

## त्रिरुक्तमन्त्यमुद्गीथोऽन्यः ॥ ४१ ॥

स्पष्टम् ॥ ४१ ॥

## उपायो यस्मान्नोर्ध्वं प्रतिहारः ॥ ४२ ॥

ननु चान्येऽपि सन्त्युपायाः साममध्ये औहोवादयः । न ते हि निधनोपायाः । तेषु गौणमुपायत्वम् । अयं तु मुख्यः । कस्मात् । विशिष्ट-क्रमत्वात् भक्तीनाम् । तदुक्तम् - प्रस्तावोद्गीथ - (प. वि. सू. १. १. १) इति । न । सर्वेषूपायेष्वपि मात्राकालमासीत । मात्रिकमेवान्यत् पूर्ववत् सनियमं कुर्यात् ॥ ४२ ॥    5

## निधनं प्रत्यङ्गम् ॥ ४३ ॥

त्रय उद्गातारः । त्रयो भक्तयः । तत्र समाख्याविनियुक्तास्तिस्रः । निधनं कस्येत्यत्राह - निधनं प्रत्यङ्गमिति । प्रति अङ्गं प्रत्यङ्गम् । प्रतिहर्तारं प्रतीति सर्वप्रयोज्यमित्यर्थः ॥ ४३ ॥    10

## इतरेषां यथोक्तम् । यथोक्तम् ॥ ४४ ॥

इतरेषां भक्तिविशेषं यथोक्तम् । श्रुतौ स्वशास्त्र एव वा । श्रुतौ सह प्रस्तोतारमुवाचेति स्वशास्त्रे समाख्यया प्रस्तोतृप्रयोज्यत्वात् । तावेव    15

---

1. S[1] LV[1]. om. त्रिरुक्तम् ... स्पष्टम् ; B[1] A. त्रिरुक्तमन्त्यमुद्गीथो ॥ अन्त्यो भवति ॥ for त्रिरुक्तम् ... स्पष्टम् ; B[1] A. trans. this after गृह्यते (p. ८२. L. १).

4. S[1] B[1] LA. न तु for ननु.

10. B[1] LA DV[1]. समाख्य for समाख्या.

14. AL. भक्ति ; B[1] भविशेषं for भक्तिविशेषम् ; AL. om. वा.

15. S[1] B[1] LV[1] A. समाख्याय for ससाख्यया.

भक्ती । यथोक्तमिति स्वशास्त्रोक्तं गृह्यते । तदा वैकृतप्रत्यनन्तरत्वा-दित्यनुवादः ॥ ४४ ॥

इति पञ्चविधसूत्रे सभाष्ये द्वितीये प्रपाठके सप्तमी खण्डिका ॥ ७ ॥

॥ द्वितीयः प्रपाठकः समाप्तः ॥

5 ॥ पञ्चविधसूत्रभाष्यं समाप्तम् ॥

ॐ

*

---

1. AL. शास्त्रोक्तं for स्वशास्त्रोक्तं ; B[1]. वैकृतप्रत्यङ्गं तत्र त्वात् वादि-त्यनुवादः, V[1]. विकृतप्रत्यनन्तरत्वात् – वादित्यानुवादः, A. वैकृतप्रत्यनन्तरत्वात् । वादित्यनुवादः, DS[1]. वैकृतप्रत्यनन्तरत्वात् । वादितानुवादः for वैकृत ... इत्यनु-वादः.

5. S[1]AD. पञ्चविधसूत्रव्याख्यानं समाप्तम् ; B[1] पञ्चविधसूत्रं सव्या-ख्यानं पूर्णम्, for पञ्चविधसूत्रभाष्यं समाप्तम्.

A. after समाप्तम् adds: हरिः ओम् ॥ श्रीगणेशाय नमः ।; D. श्रीगङ्गाविश्वेश्वराभ्यां नमः ॥ काश्यां विश्वेश्वरादिसन्निधौ सुब्रह्मण्येन लिखितम् । अनसूयावद्भिः महद्भिः सम्यक् विचार्य संशोधनीयम् ॥ यथामात्रिकं लिखितम् । ओं तत् सत् । ब्रह्मार्पणमस्तु ॥ ; V. संवत् १६८१ वर्षे वैशाखवद्य १० सोमे लिषितम् । शुभं भवतु । श्रीरस्तु । त्रि० गोवर्धनेन लिखापितं हरि-हरेष ॥ त्रि० विश्वनाथसुतरामदेव ॥ इति ॥ शुभं भवतु ॥

S[1]. after समाप्तम् ॥ adds :– गङ्गाविश्वेश्वराभ्यां नमः । काश्यां विश्वेश्वरादिदेवतासंनिधौ सुब्रह्मण्येन लिखितम् । अनसूयावद्भिर्महद्भिः सम्यग् विचार्य संशोधनीयम् । यथामातृके लिखितम् । ॐ तत् सत् श्रीकृष्णार्पणमस्तु ॥

॥ ॐ ॥

## CRITICAL NOTES

P. 2. L. 6–7

अनुक्रमणादेतासामिह शास्त्रे । उच्यते । किमर्थं... The sentence does not seem to be correct. Here the commentary discusses that the sūtra ought to have said only प्रस्तावाद्या भक्तय: because the five भक्तिs of सामगान as also their sequence are too well–known to be expressly stated. The sentences beginning with क्रमार्थं answer the objection in brief. Therefore, उच्यते in the sentence looks a little cumbersome. Further the expression is not a happy one. The word उच्यते, therefore, either should be eliminated altogether or replaced with वचनम् ।

P. 7. L. 21

All the Mss. have इत्मेवमादि संभवोऽस्य लक्षणस्य पूर्वविसानप्रस्तावानीत्यवाच्यम्. It may be seen that the sentence is incomplete and the words remain unconnected. The commentator has given a number of examples which he introduces with the word उदाहरणानि. Therefore, इत्मेवमादि, if it applies to उदाहरणानि, must be इत्येवमादीनी. एवमादि cannot directly be linked with संभव: in a compound because it will only make the expression more vague and the sentence more complicated. Therefore, it is clear the sentence is not only grammatically wrong, but also inexpressive because of the scribal errors crept in and due to loss of words and punctuations during the course of copying. We have, therefore, corrected the sentence as given in our edition.

P. 8. L. 10

प्रतिभागार्थं सूत्रभेदे. If the reading as found in the Mss is accepted the sentence would be incomplete. It is evident that some words are missing after सूत्रभेदे. If, however, the word भेदे is changed to भेद: the sentence could be complete, though, what the commentator wanted to say could not evidently be conclusive.

P. 9. L. 16

The R. Simon's edition and the Mss L.V[1] DB[3] read वयम्यादौ हुवेहोइ while in the Ms A there is lacuna between दौ and होइ. It is clear that these readings are corrupt and that some words are omitted before हुवे. The word आदौ should refer to the number of melody based on वयामि [न्द्र] after the earlier example of यज्ञातृतीये. But it cannot be वयम्यादौ or वयमादौ meaning the first melody of वयमिन्द्र because the sāman referred to here is the fifth and not the first in this series of five, which is cited as an example in the context. Further the melody — next to वयमिन्द्र referred to in this sutra is इन्द्र होइ and this melody does not begin with हुवेहोइ. The gānas here are quoted by *pratīka* and wherever the gāna in the series is not the first one the particular number in quotation is expressly stated in the sūtra. Again when there are verses more than one with *pratīka* in the Grāmegeya to be precise and specific, the pratika of the melody with distinctive stobha syllables is mentioned *e.g.*, आतूऔहो. Thus the sūtrakāra has taken caution not to cause any confusion as to the exact example referred to in his sūtra.

The melodies based on वयमिन्द्र are five in number and on इन्द्र सुतेषु three. Therefore, either the exact number, if only the pratīka of the verse is quoted, or the pratīka of the gāna itself in question must be mentioned. It may eventually be either वयमिन्द्रापञ्चमे, इन्द्रसुतेषु द्वितीये or वयामौहो इन्द्राहोइ. It is most certain that for the sake of brevity and also clarity the author must have taken the second alternative and the readings here might have been: वयामौहो इन्द्राहोइ and not वयाम्यादौ हुवेहोइ.

R. Simon has noted the unwarranted आदौ here which he renders "usw (und so weiter)" but in the notes he says the meaning is uncertain (unsicher)!

P. 19. L. 11

शक्योऽयमर्थः प्रतिपत्तुम्. The readings, in all the Mss we consulted, are corrupt. The Mss V[1]LD separate प्रतिपत्तुम् from अर्थ with

a fullstop (दण्ड). In the transcript of D the word is wrongly trascribed as प्रतिवक्तुम्. Of course, in Grantha त and क can be easily confused. The Mss B[1] L join this word with the next sentence. It may be seen from this what confusion has been created by these corrupt readings and wrong punctuations. We have, therefore, corrected the readings as शक्योऽयमर्थः प्रतिपत्तुम् ।

P. 35. L. 16

यन्ततायां is uniformly corrupt without exception in all the Mss and it makes no sense. Could it be इत्यन्तोऽयमन्तः or इत्येवमन्तः?

P. 36. L. 7

The Mss except V[1] read इहाहेति which does not seem to be correct. V[1] has it as इहूहैति. The *stobhas* having mystic potency referred to in the TBr. is इहेहा (इहा+इहा or इह+इह) and not इहाहा (इहेहेति गायेत प्रतिष्ठायै TBr. XIII. 10.9). Therefore the correct readings should be इहेहेति

P. 51. L. 21

Immediately after पाद इति वचनात् the sentence तृतीयः पादः इति वचनात् appears redundant. We should have, in fact, either of the two sentences. Therefore, we have retained the second sentence deleting the first for obvious reasons.

अनिधनपरेऽपि (2.2.6), the following sūtra, is not found in the edition of R. Simon. Neither he refers to it anywhere in his translation or in the notes. However, this sutra is found in all the Mss with commentary thereon. The D takes अनिधनपरेऽपि as part of the commentary while B[1] has it immediately after the sūtra अक्षरपङ्क्तिषु... (2.2.5). If it is taken as part of the commentary the phrase तृतीयः पादः in the sūtra could mean that the third pāda would form pratihāra even though no nidhana may follow immediately thereafter. We have, however, taken it as part of the text and not of the commentary which appears to us proper. The Mss take अनिधनपरेऽपि to the following sūtra, but after एवमादीनि in the commentary, again

यं राज्ये... is repeated. The Ms B[1] does not repeat this again after एवमादीनि

P. 73. L. 4

The example is taken from दधन्वेवा५ यदीमान् (ग्रा. गे. 3.10.94. 1) and the passage under reference quoted as example in the above gāna is: नाइमस्चक्षौवा and it follows: ई २३४ वा. But each manuscript used for our edition gives here different readings and none of them appears to be correct. We have, therefore, taken the readings from the त्वाष्ट्रीसामन् based on दधन्वे वा (सा. 94).

P. 74. LL. 14 and 15

All the Mss except the edition of R. Simon read but विस्वरादीनि. But from the commentary यस्या आदिर्नानास्वरेषु वर्तते सा, it is clear, that विस्वरादीनि is wrong. It should be either an adjective of ओवा or should be in locative case. R. Simon translates the sutra:—" (Desgleichen) Ova), auch dann, Wenn sein Anfang auf verschiedenen Tonen) Steht)." We have, therefore, accepted the reading विस्वरादिनि

# APPENDIX

An alphabetical index of sāma-gānas cited as examples for (1) *Prastāva* (2) *Pratihāra* and (3) *Nidhana* in the Pañcavidha-sūtra is given below. Under each of the three *bhaktis* first the gānas are alphabetically arranged with reference to technical names of the gānas as also of sutra of the PV and then the names of the gānas with references to the respective gānas and sutra of the PV are arranged in alphabetical order. Examples cited in the commentry are marked with (c).

## प्रस्तावः

### (A)

| Chant | Ref. | Name | Sūtra |
|---|---|---|---|
| अ | | | |
| अचिक्रदद्वृषा | (ग्र. १४.४.४९७.१) | वार्षाहरम् | १.१.१४ |
| अन्तर्देवेषु ३ रोचा १ सा २ इ होई ऽ २३४ या । इया हाई । | (आ. गा. २८७) | चक्षुः | १.२.२३ |
| अपघ्नाऽ२३न् | (ग्रा. १४.४.५१०.१) | भारद्वाजम् | १.२.७ |
| हावौ होहाउ । अभित्वा | (आ. गा. १८) | वरुणः | १.२.१ |
| अयम्पूषौ हो | (ग्रा. १३.८.५४६.१) | क्रौञ्चम् | १.२.१ |
| अयापवस्वैना | (ग्रा. १६.७.५४१.३) | श्रौष्टम् | १.१.११ |
| अयावीती | (ग्रा. १३.३.४९५.२) | सोमसाम | १.१.११ |
| अर्षा । इहा | (ग्रा. १४.४.५०३.१) | दार्ढच्युतम् | १.२.६ |
| असावि देवम् | (ग्रा. ८.६.३१३.१) | प्राकर्षम् | १.१.८ |
| आ | | | |
| आइवा | (आ. गा. प. शि. ४) | पुरीषपदानि | १.२.२८ |
| आतू औहो | (ग्रा. ५.७.१८१.१) | इन्द्रस्यमायम् | १.१.१५ |
| आते दक्षम् | (ग्रा· १४.४.४९८.२) | वार्शम् | १.१.१५ |
| आनो मित्रा | (ग्रा. ६.११.२२०.१) | मित्रावरुणयोः साम | १.१.९ |
| आश्वा औहो ऽ २३४ वा | (ग्रा. १·२.१७·१) | वारवन्तीयम् | १.१.१५ |

इ

| | | | |
|---|---|---|---|
| हाउ (त्रिः) इडा (त्रिः) | (आ. गा. २४४) | इडानांसंक्षारः | १.२.१४ |
| इती ऽ २ इति (त्रिः) | (आ. गा. २४९) | निह्नवम् | १.२.१६ |
| इदन्ते | (ग्रा. २.७.६५.१) | यामं कौत्सं वा | १.१.८ |
| इन्दुः पविष्ट चेतनः | (ग्रा. १३.२.४८१.३) | बभ्रोः साम । कौम्भस्य वा | १.१.५ |
| इन्दु ऽ ३ वाजी | (ग्रा. १५.७.५४०.१) | दाशस्पत्यम् | १.२. २ |
| इन्द्रमच्छ | (ग्रा. १७.१०.५६६.४) | अनुपदम् | १.२.८ |
| ,, | (,, ,, ५) | पौष्कलम् | १.१.६ |
| इन्द्रामिन्द्रं वाया ऽ म् | (ग्रा. ४.२.१३०.१) | इन्द्राण्याः साम | १.१.१४ |
| औहो होइ । .... इन्द्राऽ२य | (ग्रा. १०.४.३८८.३) | सौमित्रम् | १.१.११ |
| इन्द्रायेन्दो | (ग्रा. १३.१.४७२.३) | वैश्वदेवम् | १.१.१४ |
| ,, | (,, ,, ,, ,,) | ,, | १.१.११५ |
| इन्द्रा हाउ हाहोइ । पर्वता | (ग्रा. ९.११.३३८.१) | वैश्वामित्रम् | १.१.१२ |
| इन्द्रा ऽ २ हा ३१ इ | (ग्रा. १२.११.४५६.२) | वैराजम् | १.२.४ |
| इन्द्रा ऽ ३ होइ । हवे ऽ३ होइ | (ग्र. १०.४.३८१.२) | अनुक्रोशम् | १.१.१५ |
| इन्द्रो विश्वस्य | (ग्रा. १२.११.४५६.१) | वैराजम् | १.२.३ |
| हाउ । (त्रिः) इमा (त्रिः) | (आ. गा. २४३) | प्रजापतेर्हृदयम् | १.२.१४ |

उ

| | | | |
|---|---|---|---|
| उच्चातेजा - | (ग्रा. १२.१.४६७.२) | आजिगम् | १.१.१५ |
| हाउ(त्रिः) वा प्रागन्यदनुवर्तते।... उद्धृत्य - | (आ. गा. १९१) | अहोरात्रयोर्व्रतम् | १.१.११ |
| उन्नयामि । होइ | (आ. गा. २९०) | आदित्यात्म | १.२.२४ |
| उपह्वराइ । गिरा ऽ २ इणाम् | (ग्रा. ४.३.१४३.१) | शाकल्यसाम | १.१.१५ |
| उपाउप । .... परीतोषि .... | (ग्रा. १४.५.५१२.१३) | गूर्दः | १.१.११ |
| उपोषुजातमप्तुरम् | (ग्रा. १३.३.४८७.२) | यामम् | १.२.५ |
| ऊभाइ (उभे) | (आ. गा. १३०) | श्येनम् | १.१.११ |
| उवी ऽ २ उवि | (आ. गा. २७०) | आदित्यव्रतम् | १.२.२१ |

ए

| | | | |
|---|---|---|---|
| एतमुत्यं | (ग्रा. १७.११.५८१.४) | कौल्मलबर्हिषम् | १.१.१५ |
| एपुरोजिती | (आ. गा. ४९) | अतीषङ्गम् | १.१.१२ |

| | | | |
|---|---|---|---|
| ए । विदामघवन्विदाः | (आ. गा. प. शि. १) | शाकरम् | १.२.२६ |
| एष ब्रह्मौहो । यात्रृत्विया: | (ग्रा. ११.१०.४६८.५) | जमदग्नेः शिल्पम् | १.२.३ |
| एषस्य धारया सुताः | (ग्रा. १७.११.५८४.४) | सोमसाम | १.२.२ |
| एषा हाउ | (ग्रा. १७.११.५८४.२) | सन्तनि | १.१.१२ |
| एस्वादोः | (आ. गा. १३१) | वृषकम् | १.१.१५ |
| एस्वादोः ओ ऽ ३ वा | (आ. गा. १२९) | पार्थुरश्मम् | १.१.१२ |
| एस्वादोः | (आ. गा. १२८) | संकृति | १.२.११ |
| **ओ** | | | |
| ओ ऽ ३१ म् । स्वादोरे | (आ. गा. २४८) | शाक्कर-ऋषभः | १.१.११ |
| **औ** | | | |
| औहौ होइ ।....इन्द्रा४ऽ२य | (ग्रा. १०.४.३८८.३) | सौमित्रम् | १.१.११ |
| औहोहोव होइ (द्विः) सोम्यंमधु | (आ. गा. २६५) | आत्म | १.२.१९ |
| **क** | | | |
| कईम् । विया ऽ २३ । ओवोऽ३ आत्ताः | (ग्रा. ११.९.४३३.३) | निकम् | १.१.१३ |
| कदावसो | (ग्रा. ६.१२.२२८.१) | कौत्सम् | १.१.९ |
| हाउ (त्रिः) ऊऽ२ । कहा२ उ (त्रिः) कश्यपस्य | (आ. गा. १८६) | कश्यपस्य व्रतम् | १.२.१ |
| **ग** | | | |
| गायन्तित्वा हाइ (C) | (ग्रा. ९.१२.३४२.२) | शैखण्डिनम् | १.१.७ |
| **च** | | | |
| चन्द्रमा आउवा । प्सुवान्तराउवा | (ग्रा. ११.७.४१७.१) | त्रैतम् | १.१.१५ |
| चित्रा । ऽ ६ ए (C) | (ग्रा. २.७.६४.२) | ऋतुसाम | १.१.७ |
| **ज** | | | |
| जातः परेण धर्मणा | (ग्रा. ३.९.९०.१) | इन्द्रस्य प्रियम् | १.१.११ |
| **त** | | | |
| तं वः सखायः | (ग्रा. १७. २०.५६९.१) | कार्णश्रवसम् | १.१.१५ |
| तक्षद्यदी । होइ । | (ग्रा. १५.७.५३७. १) | वाचः साम | १.१.१४ |

| | | | |
|---|---|---|---|
| तिस्रोवाच उदीरते | (ग्रा. १२.१.४७१.१) | वैष्टम्भम् | १.१.१२ |
| त्युमूषु | (ग्रा. ९.११.३३२.२) | तार्क्ष्यसाम | १.१.९ |
| त्रातारमिन्द्रम् | (ग्रा. ९.११.३३३. १) | इन्द्रस्य त्रातम् | १.२.२ |
| त्वावतोऽ३ । हौऽ३होऽ३१इ | (ग्रा. ८.५.१९३.१) | धुरासाकमश्वम् | १.१.४ |

**न**

| | | | |
|---|---|---|---|
| नकि देवाः | (ग्रा. ५.७.१७६.१) | गोधासाम | १.१.१२ |
| नकिष्ट३० । कर्मणा (C) | (ग्रा. ६.२.२४३.१) | वैखानसम् | १.१.७ |
| ना२माः | (आ. गा. १२-१४) | देवव्रतानि | १.२.१५ |

**प**

| | | | |
|---|---|---|---|
| परीतोषिञ्चता — | (ग्रा. १४.५.५१२.१) | अच्छिद्रम् | १.१.१२ |
| " | (" " २) | रयिष्ठम् | १.१.१२ |
| परीतोषा ऽ २ इ । | (" " १२) | सोमक्रतवीयम् | १.१.११ |
| उपाउप । .... परीतो .... | (" " १३) | गूर्दः | १.१.११ |
| हाउ (त्रिः) वा । परीतो .... | (" " १४) | प्रतोदः | १.१.११ |
| हाओ ऽ २३४ वा....परीतो | (" " १५) | महायौधाजयम् | १.१.११ |
| पवस्व सोममहान् | (ग्रा. ११.९.४२९.१) | धर्म | १ १.११ |
| पवस्व सोम महे | (ग्रा. ११.९.४३०.१) | विधर्म | १.१.११ |
| होइयाहोइयाहोइयाऽ३४३पिब | (आ. गा. ८६) | वैराजम् | १.२.१० |
| पुनाना | (ग्रा. १४.५.५११.१३) | स्ववासिनी | १.१.११ |
| एं पुरोजीती | (आ. गा. ४९) | अतीषङ्गम् | १.१.१२ |
| प्रकाव्य | (ग्रा. १५.६.५२४.१) | वाराहम् | १.१.१५ |
| प्रत्यु अदर्शि | (ग्रा. ८.८.३०३.१) | उषःसाम | १.१.९ |
| प्रधन्वासो | (ग्रा. १७.१०.५६७.३–४) | ऐषिरम् | १.१.१४ |
| प्रसोऽ३हाइ । आग्नेऽ३हाइ । | (ग्रा. ३.१२.१०८.१) | वाजभृत् | १.१.१५ |
| प्रो अयासाइत् | (ग्र. १६.९.५५७.४) | तन्त्रम् | १.२.१. |

**य**

| | | | |
|---|---|---|---|
| य एक उद्विदयते | (ग्रा. १०.४.३८९.२) | त्रैककुभम् | १.१.१५ |
| यज्ञा- | (ग्रा. १.४.३५.३) | श्नौष्ठीयम् | १.१.१५ |

| | | | |
|---|---|---|---|
| यदिन्द्र | (ग्रा. ९.१२.३४५.३) | आकूपारम् | १.१.६ |
| याऽ२३४ ए । क २३४ ईत् | (ग्रा. १०.४.३८९.२) | त्रैककुभम् | ११.१५ |

**र**

| | | | |
|---|---|---|---|
| रा । वता २ इः । नाः । | (आ· गा· ७३) | रेवत्यः | १·१·५ |

**व**

| | | | |
|---|---|---|---|
| वयामौहोवाहाइ | (ग्रा· ४·२·१३२·५) | अदारसृत् | १·१ १५ |
| हाउ(त्रि·) आयु(त्रिः) ज्योतिर्.... वाग्ज्योती २३४५: | (आ· गा· २५९) | दिवाकीर्त्यम् | १·२·१८ |
| वाक् । मनः | (आ· गा· २८६) | चक्षुः | १·२·२२ |
| हुवाइ वाचाम् | (आ· गा· १६८) | वाचोव्रतम् | १·२·१२ |
| वित्वदापो | (ग्रा· २·७·६८·१) | आश्वम् | १·१·८ |
| हा । यथाइ दिवो हाइ । वित्वत् | (ग्रा· २·७·६८·२) | आश्वम् | १·१·१३ |
| ए २ । विदामघवन्विदाः | (आ· गा· प· शि· १) | महानाम्न्यः | १·२·२५ |
| ,, ,, | ( ,, ,, ,, ) | शाक्वरम् | १·२·२६ |
| वृषापावाऽ२३ । हौहोइ । औ ३ होइ २३४५ | (ग्रा· १२·१·४६९·६) | इन्द्रसाम | १·१·१४ |

**श**

| | | | |
|---|---|---|---|
| शन्नो देवीः | (ग्रा· १·३·३३·१) | काशीतम् | १·१·८ |
| ,, | (,, ,, ,, ,,) | ,, | १·१·१३ |

**स**

| | | | |
|---|---|---|---|
| सखाऽ३या आ ऽ २ । | (ग्रा· १७·१०·५६८·१) | शौक्तम् | १·२·२ |
| स घा यस्ते | (ग्रा· ९·२·३६५·१) | शाकपूतम् | १·१·१४ |
| सन्त्वा भूतान्यैरयन होइ | (आ· गा· २६९) | समैरयानि | १·२·२० |
| सुरूपकृत्नुम् | (आ· गा· ४६) | रैवतऋषभः | १·२·९ |
| औहोहोवहोइ (द्विः) सोम्यं मधु | (आ· गा· २६५) | आत्म | १·२·१९ |
| स्वयंस्कुन्वाइ । | (आ· गा· २५०) | निह्नवः | १·२·१७ |
| स्वादाइष्ठाया | (ग्रा· १२·१·४६८·१) | आजिगम् | १·११·५ |
| स्वादिष्ठया | (ग्रा· १२·१·४६८·७) | शकुलः | १·१·५ |

| | | | |
|---|---|---|---|
| एस्वादोः | (आ· गा· १२८) | संकृति | १·२·११ |
| ,, | (आ· गा· १२९) | पार्थुरश्मम् | १·१·१२ |
| ,, | (आ· गा· १३१) | वृषकम् | १·१·१५ |
| ओऽ३१म् । स्वादोरे | (आ· गा· २४८) | शाकरऋषभः | १·१·११ |

ह

| | | | |
|---|---|---|---|
| हा । ययाइदिवोहाइ । विश्वत् | (ग्रा· २·७·६८·२) | आश्वम् | १·१·१३ |
| हाउ (त्रिः) अहो अहो । | (आ· गा· २४०) | कश्यपग्रीवा | १·२·१४ |
| हाउ (त्रिः) इडा (त्रिः) | (आ· गा· २४४) | इडानांसंक्षारः | १·२·१४ |
| ,, (,,) आयुः (त्रिः) ज्योतिर्.. | (आ· गा· २५९) | दिवाकीर्त्यम् | १·२·१८ |
| ,, (,,) इमा (,,) | (आ· गा २४३) | प्रजापतेर्हृदयम् | १·२·१४ |
| ,, (,,) ऊऽ२ (,,) | (आ· गा· २०७) | इलान्दाद्यम् | १·२·१३ |
| ,, (,,) वाग्घहहह | (आ· गा· २४८) | कश्यपपुच्छम् | १·१·११ |
| ,, (,,) वा । परीतो | (ग्रा· १४·५·५१२·१४) | प्रतोदः | १·१·११ |
| ,, (,,) वा । प्रागन्यद्.... उदुत्य- | (आ· गा· १९१) | अहोरात्रयोर्व्रतम् | १·१·११ |
| हाओ २३४ वा । परीतो | (ग्रा· १४·५·५१२·१५) | महायौधाजयम् | १·१.११ |
| हावौ होहाउ । अभित्वा- | (आ· गा· १८) | वरुणः | १.२.१ |
| हुवाइ वाचाम | (आ· गा· १६८) | वाचोव्रतम् | १.२.१२ |
| होईऽ२३४ या ।....अपघ्ना ऽ २३ न् | (ग्रा· १४·४·५१०·१) | भारद्वाजम् | १.२.७ |
| होइया होइया होइयाऽ३४३पिब | (आ· गा· ८६) | वैराजम् | १.२.१० |
| होवा ऽ३१ हऽ३ आ ऽ इ । हियाऽ२३४५ । | (आ· गा· ८५) | पञ्चनिधनं — वामदेव्यम् | १.१.११ |

## (B)

| Name | Ref. | Sūtra |
|---|---|---|
| **अ** | | |
| अच्छिद्रम् | (ग्रा. १४.५.५१२.१) | १.१.१२ |
| अतीषङ्गम् | (आ. गा. ४९) | १.१.१२ |
| अदारसृत् | (ग्रा. ४.२.१३२.५) | १.१.१५ |
| अनुक्रोशम् | (ग्रा. १०.४.३८१.२) | १.१.१५ |
| अनुपदम् | (ग्रा. १७.१०.५६६.४) | १.२.८ |
| अहोरात्रयोर्व्रतम् | (आ.गा. १९.१) | १.१.११ |
| **आ** | | |
| आकूपारम् | (ग्रा. ९.१२.३४५.३) | १.१.६ |
| आजिगम् | (ग्रा. १२.१.४६७.२) | १.१.१५ |
| ,, | (ग्रा. १२.१.४६८.१) | १.१.१५ |
| आत्म | (आ. गा. २६५) | १.२.१९. |
| आदित्यव्रतम् | (आ. गा. २७०) | १.२.२१ |
| आदित्यात्मा | (आ. गा. २९०) | १.२.२४ |
| आश्वम् | (ग्रा. २.७.६८.१) | १.१.८ |
| ,, | ( ,, २) | १.१.१३ |
| **इ** | | |
| इडानांसंक्षारः | (आ. गा. २४४) | १.२.१४ |
| इन्द्रसाम | (ग्रा. १२.१. ४६९.६) | १.१.१४ |
| इन्द्रस्य त्रातम् | (ग्रा. ९.११.३३३.१) | १.२.२ |
| इन्द्रस्यप्रियम् | (ग्रा. ३.९.९०.१) | १.१.११ |
| ,, मायम् | (ग्रा. ५.७.१८१.१) | १.१.१५ |
| इन्द्राण्याः साम | (ग्रा. ४.२.१३०.१) | १.१.१४ |
| इलान्दम् | (आ. गा. २०७) | १.२.१३ |
| **उ** | | |
| उषःसाम | (ग्रा. ८.८.३०३.१) | १.१.९ |

| | | |
|---|---|---|
| **ऋ** | | |
| ऋतुसाम (C) | (ग्रा. २.७.६४.२) | १.१.७ |
| ऋषभः शाकर- | (आ. गा. २४८) | १.१.११ |
| **ऐ** | | |
| ऐषिरम् | (ग्रा. १७.१०.५६७.३.४) | १.१.१४ |
| **क** | | |
| कश्यपग्रीवा | (आ. गा २५०) | १.२.१४ |
| कश्यपपुच्छम् | (आ. गा. २४८) | १.१.११ |
| कश्यपस्य व्रतम् | ( ,, १८६) | १.२.१ |
| कार्णश्रवसम् | (ग्रा. १७.२०.५६९.१) | १.१.१५ |
| काशीतम् | (ग्रा. १.३.३३.१) | १.१.८ |
| ,, | ( ,, ) | १.१.३ |
| कौत्सम् | (ग्रा. ६.१२.२२८.१) | १.१.९ |
| ,, यामं वा | (ग्रा. २.७.६५.१) | १.१.८ |
| कौम्भ्यस्य साम । बभ्रोर्वा | (ग्रा. १३.२.४८१.३) | १.१.५ |
| कौल्मलबर्हिषम् | (ग्रा. १७.११.५८१.४) | १.१.१५ |
| क्रौञ्चम् | (ग्रा. १६.८.५४३.१.) | १.२.१ |
| **ग** | | |
| गूर्दः | (ग्रा. १४.५.५१२.१३) | १.१.११ |
| गोधासाम | (ग्रा. ५.७.१७६.१) | १.१.१२ |
| **च** | | |
| चक्षुः | (आ. गा. २८६) | १.२.२ |
| ,, | ( ,, २८७) | १.२.२६ |
| **ज** | | |
| जमदग्नेः शिल्पम् | (ग्रा. ११.१०.४६८.५) | १.२.३ |
| **त** | | |
| तन्त्रम् | (ग्रा. १६.९.५५७.४) | १.२.१ |
| तार्क्ष्यसाम | (ग्रा. ९.११.३३२.२) | १.१.९ |
| त्रतम् इन्द्रस्य See इन्द्रस्य त्रातम् | | |

| | | |
|---|---|---|
| त्रैककुभम् | (ग्रा. १०.४.३८९.२) | १.१.१५ |
| त्रैतम् | (ग्रा. ११.७.४१७.१) | १.१.१५ |
| **द** | | |
| दार्ढच्युतम् | (ग्रा· १४·४·५०३·१) | १.२.६ |
| दाशस्पत्यम् | (ग्रा, १५.७.५४०,१) | १.२.२ |
| दिवाकीर्त्यम् | (आ· गा· २५९) | १.२.१८ |
| देवव्रतानि | (आ· गा· २१२·१४) | १.२.१५ |
| **ध** | | |
| धर्म | (ग्रा· ११·९·४२९·१) | १.१.११ |
| धुरासाकमश्वम् | (ग्रा· ८·५·१९३·१) | १.१.१४ |
| **न** | | |
| निकम् | (ग्रा· ११·९·४३३·३) | १.१.१३ |
| निह्नवम् | (आ· गा· २४९) | १.२.१६ |
| ,, | ( ,, ,, २५०) | १·२.१७ |
| **प** | | |
| पञ्चनिधनं वामदेव्यम् | (आ· गा· ८५) | १.१.११ |
| पार्थुरश्मम् | ( ,, ,, १२९) | १.१.१२ |
| पुरीषपदानि | ( ,, ,, प· शि· ४) | १.२.२८ |
| पौष्कलम् | (ग्रा· १७·१०·५६६·५) | १.१.६ |
| प्रजापतेर्हृदयम् | (आ· गा· २४३) | १.२.१४ |
| प्रतोदः | (ग्रा· १४·५,५१२·१४) | १.१.११ |
| प्राकर्षम् | (ग्रा· ८·९·३१३·१) | १.१·८ |
| **भ** | | |
| भारद्वाजम् | (ग्रा· १४·४·५१०·१) | १.२.७ |
| **म** | | |
| महानाम्न्यः | (आ· ग· प· शि· १) | १.२.२५ |
| महायौधाजयम् | (ग्रा· १४·५·५१२·१५) | १.१.११ |
| मित्रावणरुयोः संयोजनम् | (ग्रा· ६·११·२२०·१) | १.१.९ |

